श्रीगणेशायनमः॥ ॥शतानीकउवाच॥
मयाहिदेवदेवस्यविष्णोरमिततेजसः॥श्रुताः
संभूतयःसर्वाःगदतस्तवसुव्रत॥१॥यदिप्रस
न्नोभगवाननुग्राह्योस्मिवार्याद॥तदहंश्रोतु
मिच्छामिनृणांदुःस्वप्ननाशनम्॥२॥स्वप्नादिषु
महाभागदृश्यंतेयेशुभाशुभाः॥फलानिनप्रय
च्छंतितद्गुणान्येवभार्गव॥३॥नारदपुण्यंपवि
त्रंचनृणामतिशुभप्रदम्॥दुःस्वप्नोपशमनंत
न्मांविस्तरतोवद॥४॥ ॥शौनकउवाच॥ ॥

ग· इदमेवमहाभागपृष्टवांश्चपितामहम्॥भीष्मं मो·
१ धर्मभृतांश्रेष्ठंधर्मपुत्रोयुधिष्ठिरः॥५॥आद्यंपुरु
षमीशानंपुरुहूतंपुरातनम्॥ऋतमेकाक्षरंब्रह्म
व्यक्ताव्यक्तंसनातनम्॥६॥असच्चासच्चय-
श्चैवंनित्यंसदसतःपरम्॥परंपराणांपरमंपु-
राणांपरमव्ययम्॥७॥मांगल्यंमंगलंविष्णुंवरे
ण्यमनघंशुचिम्॥नमस्कृत्यहृषीकेशंचराच
रगुरुंहरिम्॥८॥प्रवक्ष्यामिमहापुण्यंसकृद्वै- १
पायनस्यच॥येनोक्तेनश्रुतेनापिनश्यतेसर्व



पातकम्॥९॥नारायणसमोदेवोनभूतोनभवि
ष्यति॥एतेनसत्यवाक्येनसर्वार्थान्साधयाम्यहम्
१०॥किंतस्यबहुभिर्मंत्रैःकिंतस्यबहुभिर्व्रतैः॥न
मोनारायणायेतिमंत्रःसर्वार्थसाधकः॥११॥ज
ज्ञेबहुज्ञंपरमत्युदारंयद्वीपमध्येसुतमात्मवंतम्
पराशराद्गंधवतीमहर्षेतस्मैनमोज्ञानतमोनुदा
य॥१२॥नमोभगवतेतस्मैव्यासायामिततेजसे
यस्यप्रसादाद्वक्ष्यामिनारायणकथामिमाम्१३
वैशंपायनमासीनंपुराणोक्तविचक्षणम्॥इम

ग· मर्थंसराजर्षिः पृष्टवान् जनमेजयः॥१४॥ ॥ज
२ नमेजयउवाच॥ किंजपन्मुच्यतेपापात्किंजप-
न्सत्स्वमश्नुते॥दुःस्वप्ननाशनंपुण्यंश्रोतुमिच्छा
म्यानद॥१५॥वैशंपायनउवाच॥ ॥एवमेव
पुराप्रश्नंपृष्टवांस्तेपितामहः॥भीष्मंपंञ्चलिना-
श्रेष्ठंतंचाहंकथयामिते॥१६॥देवव्रतंमहाप्राज्ञस
र्वशास्त्रविशारदं॥विनयेनोपसंगम्यपर्यपृच्छ-
द्युधिष्ठिरः॥१७॥ ॥युधिष्ठिरउ०॥ ॥दुःस्वप्न
नाशनंघोरम्भवेद्यस्यभरतर्षभ॥ प्रयतःकिंजपन्

जाप्यंविबुधःकिमनुस्मरेत्॥१८॥यस्यकुर्यान्न
संस्कारंप्रातरुत्थायमानवः॥किंचध्यायेतसत
तंकिंपूज्यंवाभवेत्सदा॥१९॥पितामहप्रसादेन
बुद्धिमेदोप्रभवेन्ममे॥तदहंश्रोतुमिच्छामिमब्रूहि
नोवदतांवर॥२०॥ ०॥ भीष्मउवाच॥ ०॥०
शृणुराजन्महाबाहोकथयिष्यामिशांतिकम्॥
दुःस्वप्नदर्शनेजाप्यंयद्धानित्यंसमाहितैः॥२१॥
अत्राप्युदाहरंतिममितिहासंपुरातनम्॥गजेंद्रमो
क्षणंपुण्यंकृष्णस्याक्लिष्टकर्मणः॥२२॥सर्वर

लमयः श्रीमान्स्त्रिकूटोनामपर्वतः॥सुतःपर्व
तराजस्यसुमेरोर्भास्करद्युतेः॥२३॥क्षीरोदज
लवीच्यग्रैर्धौतामलशिलातलः॥उत्थितःसाग
रंभित्वादेवर्षिगणसेवितः॥२४॥अप्सरोभिः
परिवृतःश्रीमत्प्रस्रवणाकुलः॥गंधर्वैःकिन्नरै
र्यक्षैःसिद्धचारणपन्नगैः॥२५॥मृगैःसिंहैर्गजें
द्रैश्चवृतगात्रोविराजते॥पुन्नागैःकर्णिकारैश्च
सद्दिव्यैर्दिव्यपाटलैः॥२६॥चूतनिंबकदंबैश्चचं
दनागरुचंपकैः॥शालैस्तालैस्तमालैश्चतरुभि

श्चार्जुनैस्तथा ॥२७॥ बकुलैः कुंदपुष्पैश्च सरलैर्दे
वदारुभिः ॥ मंदारकुसुमैश्चान्यैः पारिजातैश्च स
र्वशः ॥२८॥ एवं बहुविधैर्वृक्षैः सर्वतः समलंकृ-
तः ॥ नानाधात्वंकितैः शृंगैः प्रस्रवद्भिः समंततः ॥
२९॥ शोभितो रुचिरप्रख्यैः कंदरीभिर्विस्तीर्णसा
नुभिः ॥ मृगैः शाखामृगैः सिंहैर्मातंगैश्च सदाम
दैः ॥३०॥ जीवंजीवकसंघुष्टं चकोरशिखिनादित
म् ॥ तस्यैकं कांचनं शृंगं सेवते यं दिवाकरः ॥३१
॥ नानापुष्पसमाकीर्णं नानाशृंगैः समाकुल

मू॥द्वितीयंराजतंशृंगंसेव्यतेयंनिशाकरः३२पां
डुरांबुदसंकाशंतुषारचयसन्निभम्॥वज्रेंद्रनी
लवैडूर्यतेजोभिर्भासयन्नभः॥३३॥तृतीयंब्रह्म
सदनंमकुष्टंशृंगमुत्तमम्॥पद्मरागसमप्रख्यंता
रागणसमन्वितम्॥३४॥नैतत्कृतघ्नाःपश्यंतिन
नृशंसाननास्तिकाः॥नातप्ततपसोलोकेयेचपा
पकृतोजनाः॥३५॥नानाराधितगोविंदाःशैलंप
श्यंतिमानवाः॥तस्यसानुमतःपृष्ठेसरःकांचन
पंकजम्॥३६॥कारंडवसमाकीर्णराजहंसोपशो

भितम् ॥ मत्तभ्रमरसंघुष्टं चकोरशिखिनादितम् ॥ ३७ ॥ कमलोत्पलकल्हारपुंडरीकोपशोभितम् ॥ कुमुदैः शतपत्रैश्च कांचनैः समलंकृतम् ॥ ३८ ॥ पद्मैर्मरकतप्रख्यैः पुष्पकांचनसंन्निभैः गुल्मैः कीचकवेणूनां समंतात्परिवारितम् ॥ ३९ अत्यद्भुतं महास्थानं विचित्रशिखराकुलम् ॥ शतयोजनविस्तीर्णं दशयोजनमायतम् ॥ ४० ॥ पंचयोजनमूर्धानं सरण्तत्प्रमाणतः ॥ हिमखंडोदकं राजन्स्वादममृतोपमम् ॥ ४१ ॥ त्रैलोक्ये

हृष्टपूर्वंचयत्तत्सरमनुत्तमम्॥ स्वप्रसन्नंसरोदि
व्यंदेवानामपिदुर्लभम्॥४२॥खातेनाढ्यगुणंप्रो
क्तंशरद्योरिवनिर्मलम्॥उपाहारायदेवानांसि॰
द्धाद्यर्जितपंकजम्॥४३॥तस्मिन्सरसिदुःशात्मा वि॰
रूपोंतर्जलाशयः॥आसीद्ग्राहोगजेंद्राणांदुराधर्षो
महाबलः॥४४॥अथदंतोज्वलमुखःकदाचिद्ग॰
जयूथपः॥आजगामतृषाक्रांतःकरेणुपरिवारि
तः॥४५॥मदस्रावीजलाकांक्षीपादचारिवपर्व
तः॥वासयन्मदगंधेनमहानैरावतोपमः४६

गजोत्थंजनसंकाशोमदाच्चलितलोचनः॥ तृषि
तः पानकामोयमवतीर्णश्चतत्सरः॥४७॥ पि
बतस्तस्यतत्तोयंग्राहश्चसमपद्यत॥ सनीलः
पंकजवनेयूथमध्यगतः करी॥४८॥ गृहीतस्ते
नरौद्रेणग्राहेणातिबलीयसा॥ पश्यंतीनांकरे
णूनांक्रोशंतीनांसुदारुणम्॥४९॥ नीलयंतेपं
कजवनेग्राहेणाव्यक्तमूर्तिना॥ गजोप्याकर्षतेती
रंग्राहश्चाकर्षतेजलम्॥५०॥ तयोर्युद्धंमहाघो
रंदिव्यंवर्षसहस्रकम्॥ वारुणैः संयुतः पाशैर्नि

ग. ह्ययत्नगतिःस्मृतिः॥५१॥वेष्ट्यमानःसघोरैस्तु पाशै मो.
९ र्नागोहृदैस्तथा॥विस्फूर्जितमहाशाक्तं विक्रो-
शंश्चमहारवम्॥५२॥व्यथितःसनिरुत्साहोगृ-
हीतोघोरकर्मणा॥परमापदमापन्नोमनसाचिं
तयेद्धरिम्॥५३॥सतुनागवरःश्रीमान्नारायण
परायणः॥तमेवशरणंदेवंगतःसर्वात्मनातदा॥
५४॥एकाग्रोनिगृहीतात्माविशुद्धेनांतरात्मना॥
नैकजन्मांतराभ्यासाद्भक्तिमान्गरुडध्वजे॥५५ ७
नान्यंदेवंमहादेवात्पूजयामासकेशवात्॥दिगू

बाहुंसर्वमूर्धानंभ्रूःपादंगगनोदरम्॥५६॥आ
दित्यचंद्रनयनमनंतंविश्वतोमुखम्॥भूतात्मा
नंचमेघाभंशंखचक्रगदाधरम्॥५७॥सहस्र
शुभनामानमादिदेवमजंविभुम्॥संगृह्यपुष्क
राग्रेणकांचनंकमलोत्तमम्॥५८॥निवेद्यमन
साध्यात्वापूजांकृत्वाजनार्दने॥आपाद्मोक्षम
न्विच्छन्गजस्तोत्रमुदीरयन्॥५९॥ ॥गजेंद्र
उवाच॥ ॥ॐनमोमूलप्रकृतयेअजितायमहा
त्मने॥अनाश्रितायदेवायनिस्पृहायनमोनमः

६०॥नमआद्यायबीजायआर्षेयायप्रवर्तिने अ
नंतायचएकायअव्यक्तायनमोनमः॥६१॥नमो
गुह्यायगूढायगुणायगुणधर्मिणे॥अतर्क्याया
प्रमेयायअतुलायनमोनमः॥६२॥नमःशिवाय-
शांतायनिश्चयाययशस्विने॥सनातनायपूर्वा
यपुराणायनमोनमः॥६३॥नमोजगत्प्रतिष्ठाय
गोविंदायनमोनमः॥नमोदेवाधिदेवायस्वभा
वायनमोनमः॥६४॥नमोस्तुपद्मनाभायसांख्ययो
गोद्भवायच॥विश्वेश्वरायदेवायशिवायहरयेनमः

॥९५॥ नमोस्तु तस्मै देवाय निर्गुणाय गुणात्म
ने॥ नारायणाय देवाय देवानांपतये नमः॥
९६॥ नमोनमः कारणवामनाय नारायणायामि
तविक्रमाय॥ श्रीशार्ङ्गचक्रासिगदाधराय
नमोस्तु तस्मै पुरुषोत्तमाय॥९७॥ गुह्याय वेद
निलयाय महोदराय सिंहाय दैत्यनिधनाय च तु
र्भुजाय॥ ब्रह्मेंद्ररुद्रमुनिचारणसंस्तुताय दे
वोत्तमाय वरदाय नमोच्युताय॥९८॥ नागें
द्रभोगशयनासनसुप्रियाय गोक्षीरहेमशुक

ग॰ नीलघनोत्तमाय॥पीतांबरायमधुकैटभनाश मो॰
८ नायविश्वायचारुमुकुटायनमोक्षराय॥ ६९॥
नाभिप्रजातकमलासनसंस्तुतायक्षीरोदकार्ण
वनिकेतयशोधराय॥नानाविचित्रमुकुटांगद
भूषणाययोगेश्वरायविरजायनमोवराय॥
७०॥भक्तिप्रियायवरदीप्तसुदर्शनायफुल्ला-
रविंदविपुलायतलोचनाय॥देवेंद्रविघ्नशम-
नोद्यतपौरुषाययोगेश्वरायवरदायनमोवरा ८
य॥७१॥नारायणायपरलोकपरायणायका-

नायकालकमलायतलोचनाय॥ रामायराव-
णविनाशकृतोद्यमायश्रीरायधीरतिलका-
य नमोवराय॥ ७२॥ पद्मासनायमणिकुंड
लभूषणाय कंसांतकायशिशुपालविनाश
नाय॥ गोवर्धनायसुरशत्रुनिकृंतनाय दामो
दरायवरदायनमोवराय॥ ७३॥ ब्रह्माय-
नायत्रिदशायनायलोकैकनाथायाहिनात्म
नाय॥ नारायणायार्तिविनाशनायमहावरा
हायनमस्करोमि॥ ७४॥ कूटस्थमव्यक्त

ग॰ मचिंत्यरूपं नारायणं कारणमादिदेवम्॥ मो॰
१ युगांतशेषं पुरुषं पुराणं तं वासुदेवं शरणं प्रप
द्ये॥ ७५॥ अदृश्यमच्छेद्यमनंतमव्ययं महर्ष
योऽक्षमयं सनातनं॥ वदंति यं वै पुरुषं पु
रातनं तं वासुदेवं शरणं प्रपद्ये॥ ७६॥ उत्ति
ष्ठतस्तस्य जलोरुकुक्षेर्महावराहस्य महीं
विदार्य॥ विधुन्वतो वेदमयं शरीरं लोकांत
रस्थं मुनयो गृणंति॥ ७७॥ योगेश्वरं चारु १
विचित्रमौलिं ज्ञेयं समस्तं प्रकृतेः सपस्तम्

क्षेत्रज्ञमात्मप्रभवं वरेण्यं तं वासुदेवं शरणं
प्रपद्ये ॥ ७८ ॥ कार्यं क्रियाकारणमप्रमेयं
हिरण्यबाहुं वरपद्मनाभम् ॥ महाबलं वे
दोधिधिं सुरेशं तं वासुदेवं शरणं प्रपद्ये
॥ ७९ ॥ किरीटकेयूरमहार्हनिष्कमण्युत्तमा
लंकृतसर्वगात्रम् ॥ पीतांबरं कांचनभक्ति
चित्रंमालाधरं केशवमभ्युपैति ॥ ८० ॥ भवो
द्भवं वेदविदां वरिष्ठं योगात्मकं सांख्यविदां
वरिष्ठम् ॥ आदित्यचंद्राग्निवसुप्रभावं प्र

ग. पद्येच्युतमात्मवंतम्॥८१॥ यदक्षरंब्रह्म मो.
१० वदंतिसर्वगंनिशम्यतन्मृत्युमुखात्प्रमुच्य
ते॥तमीश्वरंमुक्तमनुत्तमैर्गुणैःसनातनं
लोकगुरुंनमामि॥८२॥ नमस्तस्मैवराह्या
यलीलयोद्धरतेमहीम्॥ खुरमध्येगतोय
स्यमेरुःखुरखुरायते॥८३॥ श्रीवत्सांकं
महादेवंवेदगुह्यमनूपमं॥ प्रपद्येसूक्ष्मस
र्वलंवरेण्यमभयप्रदम्॥८४॥ प्रभवंसर्व १०
भूतानांनिर्गुणंपरमेश्वरम्॥ प्रपद्येमुक्त

संगानां यतिनां परमां गतिम् ॥ ८५ ॥ भग
वंतं गुणाध्यक्षमक्षरं परमं पदम् ॥ शरण्यं
शरणं भक्त्या प्रपद्ये भक्तवत्सलम् ॥ ८६ ॥
त्रिविक्रमं त्रिलोकेशं सर्वेषां प्रपितामहम् ॥
योगात्मानं महात्मानं प्रपद्येहं जनार्दनम्
॥ ८७ ॥ आदिदेवमजं विष्णुं व्यक्ताव्यक्तं स
नातनम् ॥ नारायणमणीयांसं प्रपद्ये ब्राह्म
णप्रियम् ॥ ८८ ॥ अकूपाराय देवाय नमः स
र्वमहायकते ॥ प्रपद्ये देवदेवेशमणीयांसम

गा- णोःसदा ॥ ८९ ॥ एकायलोकनाथायपरतः मो०
११ परमात्मने ॥ नमःसहस्रशिरसेअनंताय
नमोनमः ॥ ९० ॥ तमेवपरमंदेवमृषयोवेद
पारगाः ॥ कीर्तयंतिचसर्वेवैब्रह्मादीनांप
रायणम् ॥ ९१ ॥ नमस्तेपुंडरीकाक्षभक्ता
नामभयंकर ॥ सुब्रह्मण्यनमस्तेस्तुत्राहि
मांशरणागतम् ॥ ९२ ॥ तावद्भवनिमेदुः
खंचिंतासंसारसागरे ॥ यावत्कमलपत्रा ११
क्षंनस्मरामिजनार्दनम् ॥ ९३ ॥ ॥

भीष्म उवाच ॥ ॥ भक्तिं तस्य तु संचिं-
त्य नागस्यामोघसंस्तवान् ॥ प्रीतिमानभ
वद्राजंश्छ्रुत्वा चक्रगदाधरः ॥ ९४ ॥ आरु
ह्य गरुडं विष्णु राजगाम सरोत्तमः ॥ सान्नि
ध्यं कल्पयामास तस्मिन्सरसि लोकधृक् ॥
९५ ॥ ग्राहग्रस्तं गजेंद्रं च तं ग्राहं च जलाशया
त् ॥ उज्जहाराप्रमेयात्मा तरसा मधुसूद
नः ॥ ९६ ॥ जलस्थं दारयामास ग्राहं चक्रे
ण माधवः ॥ मोचयामास नागेंद्रं पाशेभ्यः

ग॰ शरणागतम् ॥९७॥ सहिदेवलशापेन हूहू मो॰
१२ गंधर्वसत्तमः ॥ इदमप्यपरंगुह्यंराजन्पुण्य
तमंशृणु ॥९८॥ ॥ युधिष्ठिरउवाच ॥
॥ कथंशापोभवेत्ताव गंधर्वस्यमहात्म
नः ॥ एतदिच्छाम्यहंश्रोतुंविस्तरेणापितामह
ह ॥९९॥ ॥ भीष्मउवाच ॥ ॥ य
थातौशापितौतेनदेवलेनमहात्मना ॥ हाहा
हूहूरतिख्यातौगीतवाद्यविशारदौ ॥१००॥ १२
उर्वशीमेनकारंभातथान्येचाप्सरोगणाः ॥

शक्रस्यपुरतोराजन्नृत्यंनेताःस्ममध्यमाः॥
१॥ततस्तौगायमानौगंधर्वौराजसत्तम॥
अन्योन्यंकुर्वतुःस्पर्धांशक्रस्यपुरतस्थितौ॥
२॥आवयोरुभयोर्मध्येयःश्रेष्ठोगीतवाद्य-
योः॥तंवदस्वसुरश्रेष्ठज्ञात्वागीतस्यल-
क्षणम्॥गंधर्वयोर्वचःश्रुत्वाप्रत्युवाचश
तक्रतुः॥युवयोर्गीतवाद्येषुविशेषोनोपल
क्ष्यते॥४॥एकएवमुनिश्रेष्ठोदेवलोनाम-
नामतः॥युवयोःसंशयच्छेत्ताभविष्यति

ग· शापंददौत्क्रुद्धोदेवलः सुमहातपाः ॥ तत- मो·
१४ स्तौशापितौतेनदेवलेनमहात्मना ॥ १४ ॥
प्रणम्याशिरसाविप्रंगंधर्वौविदमूचतुः ॥ भू
मंडलमतौत्वावांप्रसादंकुरुसुव्रत ॥ १५ ॥
निश्चयंकुरुविप्रेंद्रयेनशापाद्विमुच्यते ॥ त
तस्तौपुरुषौदृष्ट्वाउभौशापभयार्दितौ ॥ १६
प्रत्युवाचमुनिःश्रेष्ठगांधर्वाणांमयावहम्
मेरुपृष्ठेसरोरम्यंबहुवृक्षसमाकुलम् ॥ १७ १४
नानापक्षिगणाढ्यंचद्वितीयइवसागरः ॥

तस्मिन्सरोवरे रम्ये ग्राहो नित्यं भविष्यति न
गोन्तभात ॥ तयोर्मध्ये महद्युद्धं भविष्यति सु
दारुणम् ॥ १९ ॥ ग्राहेणाकृष्यमाणस्तु गज
स्तोत्रं करिष्यति ॥ तद्देवदेवदेवेशस्तुष्यंते नात्र
संशयः ॥ २० ॥ ततो नारायणः प्रीतः शापा-
त्वां मोचयिष्यति ॥ इत्युक्त्वा ऋषिणा तेन व
रेणैतौ प्रसादितौ ॥ २१ ॥ ग्राहत्वमगमत्सो
थवधं प्राप्याद्दिवं गतः ॥ आपाद्विमुक्तो युगप
द्गजो गंधर्व एव च ॥ २३ ॥ तौ च स्वं स्वं वपुः प्रा

ग·
१९

दसात्कि मनुत्तमम् ॥ ३२ ॥ वैकुंठं दुष्टदमनं सु-
ति दंमधुसूदनम् ॥ एतानि भ्रातरूपा य संस्मारि
ष्यंति ये नराः ॥ ३३ ॥ सर्वपापैः प्रमुच्यंते ते विष्णु
लोकमवाप्नुयुः ॥ ॥ श्रीभगवानुवाच ॥ ॥
एवमुक्त्वा महाराज राजेंद्र मधुसूदनः ॥ ३४ ॥
स्पर्शयामास हस्तेन गजं गंधर्वमेव च ॥ तौ च
स्पृष्टौ ततः सद्यो दिव्यमाल्यांबरावृतौ ॥ ३५ ॥
तमेव मनसा प्राप्य जग्मतुस्त्रिदशालयम् ॥ त
तो दिव्यवपुर्भूत्वा हस्ति राट् परमं पदम् ॥ ३६

मो·

१९

गच्छतिस्ममहाबाहोनारायणपरायणः॥
ततोनारायणःश्रीमान्मोचयित्वागजोत्तम
म्॥३७॥ऋषिभिस्तूयमानोथैर्देवगुह्यप
रायणैः॥ततःसभगवान्विष्णुर्दुर्विज्ञेयगतिः
प्रभुः॥३८॥शंखचक्रगदापाणिरंतर्धानं
समाविशत्॥ ॥वैशंपायनउवाच॥ ॥
गजेंद्रमोक्षणंश्रुत्वाकुंतीपुत्रोयुधिष्ठिरः॥
३९॥भ्रातृभिःसहितःसम्यक्ब्राह्मणैर्वेदपा
रगैः॥पूजयामासदेवेशंपार्श्वस्थंमधुसूद

ग· नम्॥ ४०॥ विस्मयोत्फुल्लनयनःश्रुत्वाना मा·
१७ गस्यमोक्षणम्॥ ऋषयश्चमहाभागाःस
र्वेप्रांजलयस्थिताः॥ ४१॥ अजंवरेण्यंवरप
द्मनाभंमहाबलंवेदनिधिंसुरोत्तमम्॥
तंवेदगुह्यंपुरुषंपुराणंववंदिरेवेदविदोव-
रिष्ठम्॥ ४२॥ एतत्पुण्यंमहाबाहोनराणां
पुण्यकर्मणाम्॥ दुःस्वप्नदर्शनेघोरेश्रु-
त्वापापैःप्रमुच्यते॥ ४३॥ तस्मात्त्वंहिम- १७
हाराजप्रपद्यशरणंहरिम्॥ विमुक्तःस

र्वपापेभ्यःप्राप्स्यसेपरमंपदम्॥४४॥
यदामहाग्राहगृहीतकांतरंसुपुष्पितेपद्म
वनेमहाद्विपम्॥विमोक्षयामासगजंनार्द
नोदुःस्वप्ननाशंचसुखोदयंसदा॥४५॥प
रंपराणांपरमंपवित्रंपरेशमीशंसुरलोक
नाथम्॥सुरासुरैरर्चितपादपद्मंसनातनं
लोकगुरुंनमामि॥४६॥वरंगजस्यमरणा
द्विमुक्तिहेतुंपुरुषवरंस्तुतिदिव्यदेहगीतम्
सततमपिपठंतियेतुतेषामभिहितंमरणा

नरककिल्बिषापहंस्यात्॥४७॥धर्मद्रुमःस्मृ
तिर्वेदमूलोवेदस्कंधःपुराणशाखाढ्यः॥क्र
तुकुसुमोमोक्षफलोमधुसूदनपादपोजय
ति॥४८॥नमोब्रह्मण्यदेवायगोब्राह्मणहि
तायच॥जगद्धितायकृष्णायगोविंदायन
मोनमः॥४९॥आकाशात्पतितंतोयंय-
थागच्छतिसागरम्॥सर्वदेवनमस्कारःके
शवंप्रतिगच्छति॥५०॥वेदेरामायणेचैव
पुराणेभारतेतथा॥आदौमध्येतथाचांते

हरिः सर्वत्र गीयते ॥ ५१ ॥ सर्वरत्नमयो मेरुः
सर्वाश्चर्यमयं नभः ॥ सर्वतीर्थमयी गंगा स
र्वदेवमयो हरिः ॥ ५२ ॥ गीतासहस्रनामैव
स्तवराजो ह्यनुस्मृतिः ॥ गजेंद्रमोक्षणं चैव
पंचरत्नानि भारते ॥ ५३ ॥ ॥ इति श्रीम
न्महाभारते शांतिपर्वणि अनुशासनिके प
भीष्मयुधिष्ठिरसंवादे गजेंद्रमोक्षः समाप्तः ॥
श्रीकृष्णार्पणमस्तु ॥ ॥ शुभं भवतु
श्रीरस्तु ॥ ॥ श्रीविष्णुः प्रसन्नमस्तु

(२३४)

हीपंचरत्नासहितभगवद्गीता

मितिवैशाखकृष्ण १ शके १७८७ क्रोधन
नामसंवत्सरीं छापिलीअसेतद्दिनेदंपुस्तकं
समाप्तम् ॥ ॥समाप्तयंग्रंथः॥



